# प्रश्नोत्तरमणिरत्नमाला

डॉ० अशोक कुमार कालिया

अखिल-भारतीय-संस्कृत-परिषद्
लखनऊ

## PUBLISHERS NOTE

One of the aims and objects of the Akhila Bharatiya Sanskrit Parishad, Lucknow is to procure preserve, and publish hitherto unpublished manuscripts and to reprint important but out of print Sanskrit texts. To achieve this object the Parishad has undertaken edition and publication of some manuscripts which had not seen light of the day earlier.

The publication of the present work viz. the PRAŚNOTTARAMAṆIRATNAMĀLĀ is another landmark towards the achievement of the same goal. This work was already published from Gita Press, Gorakhpur (India). The Parishad has in its huge collection two manuscripts of the work. They bear different names. One of them is entitled 'PRAŚNOTTARĀKHYĀ MAṆIRATNAMĀLĀ' and the other is named 'PRAŚNOTTARARATNAMĀLĀ'.

The learned editor of the work, Dr. A.K. Kalia is an erudite scholar of Sanskrit and a specialist of the viśiṣṭādvaita system of Indian philosophy. Perhaps Dr. Kalia was attracted towards this small but important work on account of his interest in Rāmānuja and his philosophy.

The Parishad is indebeted to Dr. A.K. Kalia in various ways. He has laid the Parishad under a fresh debt by editing this work fot it. It is hoped that the labour put in by Dr. Kalia will be amply rewarded if this 'PRAŚNOTTARMAṆIRATNAMĀLĀ' gets due recognition amongst the Scholars.

The Parishad is thankful to the proprietor of the Pnar Mudrak for bringing the work in this form.

**J. P. SINHA**
**Secretary**

## क्रमः

# प्रश्नोत्तरमणिरत्नमाला

अशोककुमार कालिया

## प्रास्ताविकम्

उत्तरप्रदेशीयराजधान्यां लक्ष्मणपुर्यां (लखनऊ) विद्यमानायाम् अखिल-भारतीय-संस्कृत-परिषदि हस्तलिखितग्रन्थानामस्ति विपुलो महनीयश्च संग्रहः। एतस्मिन् संग्रहे विविधविषय-काणां ग्रन्थानां मध्ये वर्तते स्वाकारदृष्ट्या लघीयसी किन्तु विषयदृष्ट्या महीयसी प्रश्नोत्तर-रत्नमाला-नामधेया काचन कृतिः। परिषद्ग्रन्थागारे कृतेरस्या अस्ति हस्तलेखद्वयम्। गीताप्रेस-गोरखपुरात् 'प्रश्नोत्तरी' नाम्ना कृतिरियं प्रकाशिताऽवतिष्ठते।

## सम्पादनसामग्रीविमर्शः

तस्यैतस्य प्रस्तुतसम्पादनकार्यस्य निर्वहणार्थं परिषदि विद्यमानं मातृकाद्वयं समुपयुक्तं गीताप्रेस-गोरखपुरान् मुद्रितं पुस्तकञ्च। आधाररूपेणोपयुक्तायाः सामग्र्या अस्याः संकेतादिवि-वरणं त्वित्थम्—

१. A. इति संकेतेन निर्दिष्टा अखिल-भारतीयसंस्कृतपरिषदि ७७/३५४५ संख्याका पत्रत्रया-ऽऽत्मिका मातृका देवनागराक्षरैर्लिखिता पूर्णा च। अस्यां प्रतिपत्रम् १० पंक्तयः सन्ति प्रतिपंक्तावक्षराणि च ३२।

२. B. इति संकेतेन निर्दिष्टा अखिल-भारतीयसंस्कृतपरिषदि हस्तलिखितग्रन्थागारे संस्थिता ७६/३८९९ संख्याका पत्रपञ्चकाऽऽत्मिका देवनागराक्षरैर्लिखिता पूर्णा च मातृका। अस्यां प्रतिपत्रम् ७ पंक्तयः सन्ति, प्रतिपंक्तावक्षराणि च २४।

३. C. इति संकेतेन निर्दिष्टा गीताप्रेस-गोरखपुरान्मुद्रिता 'प्रश्नोत्तरी'–नामधेया लघु-पुस्तिका।

विद्यमानपाठेषु विनैव परिवर्तनमर्थसङ्गतिर्यथा भवेत् तथा सम्पादकेनाऽनेन विशेषतया प्रयतितम्। सर्वानपि विद्यमानान् पाठान् सम्यग् विचार्य समालोच्य च कश्चन पाठोऽर्थसङ्गत्य-

नुसारं स्वीकृतोऽत्र । अन्ते श्लोकानाम् अकाराद्यनुक्रमसूची नैव विनिबद्धा तत्र विशेषोपयोगिताया अदर्शनात् । तत्स्थाने अकारादिक्रमेण प्रश्नानुक्रमणिका उत्तरनिर्देशपूर्वकं विनिवेशिताऽवतिष्ठते ।

## रचनाया अभिधानविमर्शः

रचनाया उपर्युल्लिखितयोर् मातृकयोः पुस्तिकायाश्चावलोकनेन प्रथमा शङ्का रचनाया अभिधानमधिकृत्य समुदेति यतो हि मातृकयोः पुष्पिकयोर् भिन्नं भिन्नमभिधानं रचनाया एतस्या निर्दिष्टं दृष्टिपथमुपयाति । तथा हि A इति संकेतितायां मातृकायां प्रश्नोत्तराख्या मणिरत्नमाला इति नाम निर्दिष्टं विराजते । एवमेव B इति संकेतेन निर्दिष्टायां मातृकायां प्रश्नोत्तररत्नमाला इति नाम दृग्गोचरीभवति । गीताप्रेस-गोरखपुरान् मुद्रितायां C इति संकेतेन निर्दिष्टायां पुस्तिकायां यद्यपि पुष्पिका नास्ति तथापि 'प्रश्नोत्तरी' इति नाम मुद्रितमस्ति । एवं रचनाया एतस्या अभिधानत्रयमुपलभ्यते—

| | | | |
|---|---|---|---|
| १. | A. | मातृकायां | प्रश्नोत्तराख्या मणिरत्नमाला |
| २. | B. | मातृकायां | प्रश्नोत्तररत्नमाला |
| ३. | C. | पुस्तिकायां | प्रश्नोत्तरी |

इति चाऽस्ति नामत्रयम् । विद्यमानेषु त्रिष्वभिधानेषु किं वा स्यादेतस्या रचनाया वास्तविकं नामेत्यस्ति विचारणीयो विषयः । A. B. C. इति संकेतनिर्दिष्टासु मातृकापुस्तिकास्वन्तिमः श्लोक एवंविधः—

कण्ठङ्गता वा श्रवणङ्गता वा
प्रश्नोत्तराख्या मणिरत्नमाला ।
तनोतु मोदं विदुषां सुरम्या
रमेशगौरीशकथेव सद्यः ॥ (३२)

एतस्मिन् श्लोके प्रश्नोत्तराख्या मणिरत्नमाला इत्येतन्नाम निर्दिष्टम् अस्ति । A अत्रापि 'आख्या' इति पदं छन्दोऽनुरोधेन प्रयुक्तं स्याद् इति कृत्वा प्रश्नोत्तरमणिरत्नमाला इत्येतदेव वास्तविकं नाम स्याद् । B. मातृकायां निर्दिष्टं 'प्रश्नोत्तररत्नमाला' इति नामापि साधु भवितुमर्हं तथापि उपर्युद्धृतश्लोकानुसारं नाम्नि मणिशब्दस्य सद्भावो युक्तियुक्त एव मन्तव्यः । C. संकेतितपुस्तिकायां मुद्रितं 'प्रश्नोत्तरी' इति नामाऽप्रामाणिकमिव प्रतिभाति कुत्रापि मूले पुष्पिकायां वाऽनुल्लेखात् । अतः 'प्रश्नोत्तरमणिरत्नमाला' इत्येव समीचीनम् अभिधानं रचनाया मन्तव्यम् ।

## रचयितृविमर्शः

रचयितृप्रश्नो विशेषतयाऽस्ति जटिलः । तत्स्थाने त्रीणि नामानि प्राप्यन्ते, तद्यथा—

१. A. इति निर्दिष्टाया मातृकायाः पुष्पिकायां रचयितृत्वेन श्रीतुलसीदासस्य नाम्नः समुल्लेखो दृष्टिपथमुपयाति। एवमस्ति पुष्पिकाया योजना—'इति श्रीतुलसीदासकृता प्रश्नोत्तराख्या मणिरत्नमाला समाप्ता'।

२. B. इति निर्दिष्टाया मातृकाया पुष्पिकायां श्री शुकयतीन्द्रस्य नामोल्लिखितं विराजते। इत्थमस्ति पुष्पिकायोजना 'इति श्री शुकयतीन्द्रविरचितं प्रश्नोत्तररत्नमाला सम्पूर्णं समाप्तम्'।

३. C. इति निर्दिष्टायां पुस्तिकायां रचयितृरूपेण स्वामि-श्रीशङ्कराचार्यस्य नाम मुद्रितमस्ति।

इत्थं मातृकयोः पुस्तिकायाञ्च त्रिष्वपि स्थलेषु रचयितुर् नामत्रयं प्राप्यते—१. श्रीतुलसीदासः २. श्री शुकयतीन्द्रः ३. श्री शङ्कराचार्यश्च। एषु को वास्ति प्रश्नोत्तरमणिरत्नमालाया रचयिता इत्यस्ति विचारणीय प्रश्नः। श्री-तुलसीदासस्य कर्तृत्वं न क्षमं कल्पयितुम्, A निर्दिष्ट-मातृकातिरिक्तम् केनाप्यन्येन प्रमाणेन तत्कर्तृत्वस्यासङ्केतितत्वात्। यदि रामचरितमानसस्य रचयिता तुलसीदास एवाऽस्या अपि रचयिता स्यात् तर्ह्ययनन्यैकान्तरामभक्तो महाकविरयं परमपुरुषत्वेन श्रीरामस्य तद्भक्तेश्च प्रतिपादनमवश्यं कुर्याद् रचनायामेतस्याम्। रामस्य नामापि नोपलभ्यते कुत्राप्यत्र। शिवस्य विष्णोश्च तद्भक्तेश्च प्रधानतया प्रतिपादनमनेकत्राऽस्यां रचनायां दृष्टिगोचरतामायाति। यथा—

'कार्या प्रिया का? शिवविष्णुभक्तिः' ॥१०॥

अन्यान्यप्युद्धरणीयानि तत्र तत्राऽवलोकनीयानि प्रश्नोत्तरमणिरत्नमालायामस्याम्। एवं श्रीतुलसीदासस्य रचयितृत्वं नितरां सन्दिग्धमेव।

B. इति सङ्केतेन निर्दिष्टाया मातृकाया पुष्पिकायां श्रीशुकयतीन्द्रस्योल्लेखो रचयितृत्वेनोपलभ्यते। कोऽसौ शुकयतीन्द्रः इति तु न केनापि प्रमाणेन ज्ञायते। सर्वथाऽप्रसिद्ध एवाऽयं जनः। एतस्य कर्तृत्वकल्पनं स्यादधिकं विवादास्पदम्।

श्रीशङ्कराचार्यो गीताप्रेसगोरखपुरप्रकाशितायां पुस्तिकायां रचयितृरूपेण निर्दिष्टः। वाणीविलासप्रेस-श्रीरङ्गात् प्रकाशितेषु श्रीशङ्कराचार्यग्रन्थेषु (The Works Of Sri Sankaracharya) कृतिरियं नैव दृष्टिगोचरतामुपयाति। यद्यपि तस्य १६ तमे सम्पुटे कृतिरेका प्रश्नोत्तररत्नमालिकेति नाम्नोपनिबद्धा वर्तते तथापि सा प्रस्तुतरचनातो नितान्तं भिन्ना। तत्र ६७ श्लोकाः सन्ति, एतस्यां पुनः ३२ श्लोका एव सन्ति। एवं श्रीशङ्कराचार्यस्यापि कर्तृत्वं प्रमाणैरसाधितमेव।

एवमेकतरपक्षपातिन्या युक्तेरभावाद् एतस्मिन् विषये न किञ्चिदपि निर्णेतुं शक्यते। अत एव उपर्युल्लिखितसामग्र्या अनुरोधेन सन्दिग्धकर्तृका अनिर्णीतकर्तृका वा रचनेयम् इति मन्तव्यं सुधीभिः।

## प्रतिपाद्यविमर्शः

अस्मिन् ग्रन्थे प्रश्नोत्तरशैल्यां संसारस्य निःसारतानिरूपणपूर्वकं ततो विरक्तिः परस्मिन् पुरुषेऽनुरक्तिश्च ग्रन्थकृता सुष्ठु प्रतिपादितास्ति । भगवद्भक्तेः संसाराद् विमुखीभवनं वैराग्यं वाऽस्ति किञ्चित् प्रभावि साधनम् । एतत्प्रतिपादनमेवास्त्यस्य ग्रन्थस्य मुख्यो विषयः । अत्र वर्ण्यविषयस्य संक्षिप्तं क्रमिकं च विवेचनमपेक्षितं स्याद् इति बुद्ध्या तादृशे कर्मणि किञ्चित् प्रयस्यत इदानीम् ।

## परमतत्त्वविमर्शः

प्रश्नोत्तरमणिरत्नमालायां परमतत्त्वस्याऽवधारणाप्रश्नोऽप्यस्ति विचारणीयः । एतस्यां परम-लघुकृतौ कस्याश्चिदेकस्या देव्या देवताया वा परमतत्त्वरूपेण प्रतिपादनं नोपलभ्यते स्पष्टतया । यदि केषाञ्चित् प्रश्नानाम् उत्तरेषु शिवपारम्यमस्ति प्रतिपादितं तर्हि अन्यप्रश्नानामुत्तरेषु विष्णोरथवा शिवविष्ण्वोरुभयोरथवा ब्रह्मणः प्रतिपादनं दृष्टिपथमुपयाति । किं रूपमस्त्येतत्प्रति-पादनमित्यस्माभिरवश्यं ज्ञातव्यमित्यतः क्रमशो प्रस्तूयते विषयोऽयम्—

## ब्रह्मतत्त्वम्—

ब्रह्मतत्त्वस्य समुल्लेखोऽस्यां लघुरचनायां चतुर्वारं कृतः । तद्यथा—

(१) के हेतवो ब्रह्मगतेस्तु सन्ति ?
सत्सङ्गतिर्दान्तिविचारशक्तिः ॥ ९

(२) विद्या हि का ; ब्रह्मगतिप्रदा या ॥ ११

(३) ज्ञाते तु कस्मिन् विदितं जगत्स्यात् ?
सर्वात्मके ब्रह्मणि पूर्णरूपम् ॥ २७

(४) किं दुर्लभम् ? सद्गुरुरस्ति लोके
सत्सङ्गतिर् ब्रह्मविचारणा च ।
त्यागो हि सर्वस्य शिवात्मबोधः ॥२८॥

प्रथम उद्धरणे प्रश्न एव ब्रह्मगतिशब्दः प्रयुक्तः । द्वितीय उद्धरणेऽपि ब्रह्मगतिशब्दो विराजते । प्रथमोद्धरणे 'ब्रह्मगतेः के हेतवः सन्ति' इत्यस्ति प्रश्नः । 'सत्सङ्गतिर् दान्तिर् विचारशक्तिश्च ब्रह्मगतेर् हेतवः सन्ति' इत्युत्तरं चाऽस्ति । 'विद्या हि का ?' इत्यस्ति द्वितीयो-द्धरणस्थः प्रश्नः । उत्तरञ्चाऽस्ति 'या ब्रह्मगतिं प्रयच्छति सा विद्या' । उत्तरञ्चेदं मुण्डकोपनिषद एतद्वाक्यं स्मारयति—'अथ परा यया तदक्षरमधिगम्यते' (मुण्डक० १.१.५) । अत्रोद्धरणयोः प्रयुक्तो ब्रह्मगति-शब्दो ब्रह्मस्वरूपविषये न कञ्चिन्निश्चितार्थं प्रापयति । तृतीयोद्धरणस्थस्य प्रश्नस्यैतत्तात्पर्यम्—'कस्मिन् तत्त्वे ज्ञाते सति सर्वमिदं 'जगज्ज्ञातं भवेत् ?' प्रश्नोऽयं मुण्डकोप-

निषदः प्रश्नमिमं संस्मारयति—'कस्मिन् नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ।' उपनिषदां तात्पर्यमनुसरत्युत्तरमपि—'सर्वात्मके ब्रह्मणि ज्ञाते सति सर्वं जगत् ज्ञातं भवति' इति । चतुर्थ उद्धरणे किं दुर्लभम् ? इत्यस्ति प्रश्नः । उत्तरञ्चास्ति–'सद्गुरुः, सत्सङ्गतिः, ब्रह्मविचारणा, त्यागः शिवात्मबोधश्च सुदुर्लभाः सन्ति' ।

यद्यप्युपर्युद्धृतेषु स्थलेषु परमतत्त्वस्य किं स्वरूपं ग्रन्थकृतोऽस्ति विवक्षितम् इति नैव स्पष्टतया प्रकाशते तथाप्यस्मद्दृष्टिम् अद्वैत–वादाभिमुखं प्रेरयतीव ।

## ईशः —

स्थलद्वयेषु परमतत्त्वमिदम् ईश इति शब्देन सामान्यतया निर्दिष्टं विराजते । तद्यथा—

(१) अपारसंसारसमुद्रमध्ये
समज्जतो मे शरणं किमस्ति ?
गुरो ! कृपालो ! कृपया वदैतद्
विश्वेशपादाम्बुजदीर्घनौका ॥ १ ॥
(२) मुमुक्षुणा किं त्वरितं विधेयम्
सत्सङ्गतिर्निर्ममतेशभक्तिः ॥१७॥

अत्रोभयत्रापि 'ईशभक्तिः कार्या' इत्यस्ति प्रतिपादितम्, किन्त्वनेन ईश-शब्देन तत्स्वरूपविषये न किञ्चिदप्युक्तं भवति इति तु सुस्पष्टमेव ।

## शिवः —

शिवस्य प्रतिपादनं पञ्चस्थानेषूपलभ्यते । तद्यथा—

(१) के सन्ति सन्तो? ऽखिलवीतरागा—
अपास्तमोहाः शिवतत्त्वनिष्ठाः ॥६॥
(२) तत्त्वं किमेकम् ? शिवमद्वितीयम् ॥२०॥
(३) बुद्ध्वा न बोध्यं परिशिष्यते किम्
शिवं प्रशान्तं सुखबोधरूपम् ॥ २७॥
(४) कण्ठङ्गतैरप्यसुभिर्न कार्यं
किम् ? किं विधेयम् ? मलिनं, शिवार्चा ॥ ३०
(५) अहर्निशं किं परिचिन्तनीयम् ?
संसारमिथ्यात्वशिवात्मतत्त्वम् ॥ ३१॥

उपर्युद्धृतेषु स्थलेषु शिवतत्त्वस्य सामान्यप्रतिपादनमस्ति । 'सन्तो विद्वांसो ज्ञानिनो वा के सन्ति' इति प्रश्नोस्यत्तरेणैतदुच्यतेऽत्र यद् 'ये जना वीतरागा निरस्तमोहाश्च सन्ति अथ च शिवतत्त्वपरायणाः सन्ति त एव सन्तः' । द्वितीयमुद्धरणमस्त्यधिकं प्रासङ्गिकम् । 'तत्त्वं किमेकम्?' इत्ययमस्ति प्रश्नः । अयमभिप्रायः प्रश्नस्य 'यत् तत्त्वं एकं च यत् तत् किमस्ति' इति । उत्तरञ्चैतस्य साक्षात्सम्बद्धमस्त्यस्मत्समस्यायाः परमतत्त्वविषयिकायाः —'शिवमद्वितीयम्'— अर्थात् शिव एवास्ति तत्परम् तत्त्वम् एकमद्वितीयञ्च । तस्यैतस्य परमतत्त्वस्य शिवस्य स्वरूपं तृतीय उद्धरणे प्रतिपादितमुपलभ्यते स्पष्टतया । प्रश्नस्त्वित्थमस्ति । बुद्ध्वा न बोध्यं परिशिष्यते किम् ? अर्थात् किं तदस्ति यस्मिन् ज्ञाते न किञ्जिदन्यज् ज्ञेयमवशिष्यते उत्तरं त्वस्ति "शिवं प्रशान्तं सुखबोधरूपम्" अर्थात् आनन्दरूपं चिद्रूपं प्रशान्तञ्च शिवतत्त्वं ज्ञात्वा न किञ्जिज्ज्ञेयमवशिष्यते । एतावता ग्रन्थकृता प्रतिपादितमेतद् 'यद् आनन्दरूपः चिद्रूपः प्रशान्त एकोऽद्वितीयश्च शिव एव परमं तत्त्वम्' । उद्धरणं त्वेतच्छान्दोग्योपनिषद एकविज्ञानेन सर्वविज्ञानप्रतिज्ञां स्मारयतीव प्रतीयते । छान्दोग्योपनिषदि श्वेतकेतुमधीतविद्यं स्वपुत्रमारुणिस्त्वित्थं पृच्छति—

येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति
(छा० ६.१.३)

अर्थात् किं त्वं तज्ज्ञानं प्राप्तवानसि यस्मिन् ज्ञाते न किञ्चिदप्यविज्ञातमवतिष्ठते अर्थात् सर्वं ज्ञातं भवतीति ।

चतुर्थोद्धरणस्थः प्रश्नस्त्वयम्—'कण्ठङ्गतैरप्यसुभिः किं विधेयम्' इति । प्रश्नस्य तात्पर्यं त्विदम् 'अन्तकाले समुपस्थिते सति किं जनैः करणीयम्' इति । उत्तरं त्वस्ति शिवार्चा—शिवस्य अर्चनं पूजनमिति वा । अत्र शिवस्यार्च्चनीयत्वं प्रतिपादितम् । 'अहर्निशं किं परिचिन्तनीयम्'— अर्थाद् 'दिवाऽपि रात्रावपि निरन्तरमविच्छिन्नतया किं परिचिन्तनीयमि'त्यस्ति पञ्चमोद्धरणस्थः प्रश्नः । प्रश्नस्यैतस्योत्तरमेवं प्रतिपादितमस्ति—'संसारमिथ्यात्वशिवात्मतत्त्वम्'—अर्थात् 'शिव एवात्मतत्त्वम्, तदेव सत्, अन्यत् सर्वं मिथ्येति' परिचिन्तनीयमिति । एवम् आनन्दरूपः चिद्रूपः प्रशान्त एकोऽद्वितीयः शिव एवात्मतत्त्वम्, तदतिरिक्तं सर्वं मिथ्येत्यद्वैतवादचित्रं स्पष्टं प्रस्फुटिवाभाति ।

**विष्णुः —**

यद्यपि शिवविषये निर्विवादा ग्रन्थकृतो रुचिस्तथापि नैतेन विष्णुविषये तस्योदासीनता विद्वेषो वाऽवगन्तव्यः । एतस्यां रचनायां स्थलयोर् द्वयोर् विष्णोः स्पष्टं प्रतिपादनमस्ति। तदित्थम्—

(१) उपस्थिते प्राणहरे कृतान्ते
किमाशु, कार्यं विदुषा प्रयत्नात् ?
वाक्कायचित्तैः सुखदं यमघ्नं
मुरारिपादाम्बुजचिन्तनञ्च ।।२४।।

(२) किं कर्म ? यत्प्रीतिकरं मुरारेः ।। ३१।।

अत्र प्रथमोद्धरणस्थप्रश्नस्याऽऽशयस्त्वयम्—जीवनान्तकाले सम्प्राप्ते सति ज्ञानिना प्रयत्नपूर्वकं किं करणीयमिति'। अस्य प्रश्नस्योत्तरम् एवं प्रयच्छति कृतिकारः—'मनसा वाचा कर्मणा भगवतो मुरारेश्चरणारविन्दयोः प्रीतिकरं यमभीतिविनाशकमनुस्मरणं करणीयमिति'। अत्रत्यः प्रश्न उत्तरञ्च ३० तमश्लोकस्थप्रश्नोत्तरंमिदं संस्मारयति—'कण्ठङ्गतैरप्यसुभिः किं करणीयमिति', किन्तूत्तरं भिन्नमेव। चतुर्विंशतितमे श्लोक उक्तम्—'मुरारिपादाम्बुजचिन्तनं करणीयमिति', विंशत्तमे च श्लोके 'शिवार्चा कार्ये' त्युक्तम्। विष्णोश्चरणाम्बुजचिन्तनं करणीयं शिवार्चा वा करणीयाऽन्तिमवेलायाम् इति विरोधे समुपस्थिते उभयोर्विकल्प एव ग्रन्थकृदिष्ट इव प्रतिभाति। अर्थात् विष्णुचरणाम्बुजचिन्तनशिवार्चयोर्मध्ये किञ्चिदेकं यथाशक्ति यथारुचि जनेनाऽनुष्ठेयमिति।

द्वितीय उद्धरणे 'किं कर्म ?' इत्यस्ति प्रश्नः। प्रशस्तं कर्म किम् इत्यस्ति प्रश्नस्याशयः। उत्तरं त्विदम् 'यत्प्रीतिकरं मुरारेः'—'यत् कर्म विष्णोः प्रीतिकरं प्रीतिवर्द्धकं वाऽस्ति तदेव कर्मेति वक्तव्यम्' यद्यपि उभयोरप्युद्धरणयोर् विष्णोर्भक्तिः स्पष्टतया प्रतिपादितेति नास्त्यत्र शङ्कायाः स्वल्पोऽप्यवकाशस् तथापि पूर्वप्रतिपादितशिवविषयिकाया निष्ठायास्त्वस्ति काचिदन्यैव कथा।

## शिवविष्णूः—

प्रश्नोत्तरमणिरत्नमालायामेतस्यां त्रिषु स्थानेषु शिवस्य विष्णोश्चोभयोरपि प्रतिपादनमुपलभ्यते। तच्चेत्थम्—

[१] कार्या मया का ? शिवविष्णुभक्तिः ।। १०।।
[२] किं कर्म कृत्वा न च शोचनीयम् ;
कामारिकंसारिसमर्चनाख्यम् ।। २० ।।
[३] कण्ठङ्गता वा श्रवणङ्गता वा
प्रश्नोत्तराख्या मणिरत्नमाला।
तनोतु मोदं विदुषां सुरम्या
रमेशगौरीशकथेव सद्यः ।।३२।।

प्रथमोद्धरणे 'किं मया करणीयम्' इति प्रश्ने शिवस्य विष्णोश्च भक्तिः कार्ये'त्युक्तम्। द्वितीयोद्धरणस्थप्रश्नस्यायमाशयः 'किं तत् कर्म यस्मिन् कृते शोचनीयं किञ्चिन्न भवति' पश्चात्तापो न भवतीत्यर्थः। उत्तरमस्ति "कामारिकंसारिसमर्चनाख्यम्" कामारेः शिवस्य कंसारेर् विष्णोश्च समर्चनाख्यम् आराधनाख्यं कर्म कृत्वा न किञ्चिच्छोचनीयं भवति। एतयोरुद्धरणयोः शिवस्य विष्णोश्च भक्तिः स्पष्टं प्रतिपादिताऽवलोक्यते। अत्रापि स एव संशयः कथं वा शिवस्य विष्णोश्च भक्तिर्युगपत्कर्तुं शक्या। तदेव भक्तेर्भक्तित्वं यदनन्यत्वं नाम। एकमेवालम्बनं भक्तेर् भवितुमर्हति न त्वनेकम्। एवं पूर्वं विष्णुतत्त्वप्रतिपादनावसरे उभयोर्विकल्प एव ग्रन्थकृदिष्ट

इव प्रतिभाति इत्यस्मद्विचारोऽत्रापि समर्थितो भवति शिवविष्णुभक्तिप्रतिपादनेन। शिवभक्तिर् विष्णुभक्तिर्वा यथाशक्ति यथारुच्यनुष्ठेयेति निर्गलितार्थः। तृतीय उद्धरणे रमेशस्य विष्णोर् गौरीशस्य शिवस्य च कथासु ग्रन्थकृतः काचिद् विलक्षणप्रीतिरनुभवपदमुपयाति। अनेनैव श्लोकेन लघुग्रन्थोऽयमुपसंहृतः। अस्योपसंहारश्लोकस्यायमाशयः यथा लक्ष्मीपतेर्विष्णोर् गौरीपतेः शिवस्य च सुरम्या कथा विदुषां कृते मोदं तनुते तथैव कण्ठस्था श्रवणस्था वैषा सुरम्या प्रश्नोत्तराख्या मणिरत्नमाला विदुषां मोदं तनोतु इति।

एवं पर्यालोचने कृते वक्तुमिदं शक्यते यद् आनन्दरूपम्, चिद्रूपम्, प्रशान्तम्, एकम्, अद्वितीयञ्च तद् ब्रह्मैव तत्त्वम्, तद्व्यतिरिक्तं सर्वं मिथ्येति प्रतिपादनाद् अद्वैतवादे ग्रन्थकारस्याऽभिरुचिः प्रगाढैव प्रतिभाति। शिवविष्ण्वोः प्रतिपादनमपरब्रह्माभिप्रायं स्यादिति मन्तव्यम्। सिद्धान्ततः शिवे विष्णौ च कञ्चिद् भेदमस्वीकुर्वतोऽपि ग्रन्थकृतः शिवे काचिदनन्या भक्तिर् विशेषतया परिलक्ष्यत इव।

## नारीविषयकधारणाविमर्शः

नारीजागरणप्रधानं युगमिदम्। प्रश्नोत्तरमणिरत्नमालाख्ये लघुतमेऽपि ग्रन्थेऽस्मिन् नारीविषयमधिकृत्य बहु प्रपञ्चितं ग्रन्थकारेण। तच्च मूले प्रहरदिव प्रतिभाति नारीसम्मानस्य। तानि स्थलान्यत्रोदाह्रियन्ते—

१. 'द्वारं किमेकं नरकस्य ? नारी।'—३

२. 'सम्मोहयत्येव सुरेव का ? स्त्री।'—६

३. 'किमत्र हेयम् ? कनकं च कान्ता।'—८

४. 'प्राज्ञोऽथ धीरश्च समस्ति को वा ?
प्राप्तो न मोहं ललनाकटाक्षैः॥'—१२

५. 'विज्ञान्महाविज्ञतमोऽस्ति को वा ?
नार्या पिशाच्या न च वञ्चितो यः।'—१५

६. 'ज्ञातुं न शक्यं च किमस्ति सर्वैः ?
योषिन्मनो यच्चरितं तदीयम्॥'—१६

७. विश्वासपात्रं न किमस्ति ? नारी।'—१९

८. त्याज्यं सुखं किम् ? स्त्रियमेव सम्यक्।'—२०

९. किं तद् विषं भाति सुधोपमम् ? स्त्री।'—२९

उपर्युदाहृतेषु स्थलेषु नारीविविधगर्ह्यरूपेषु प्रतिपादिताऽवलोक्यते। किमर्थमियं बलवती गर्हणा नार्या इत्यस्ति विवेचनीयम्। वस्तुतो नारीविषयिका रतिर् आध्यात्मिकमार्गे बाधिकारूपेण स्वीकृता विद्वद्भिरित्यतः साधकानां हृदयेषु नारीविषयकविरक्तिजननार्थमयं नारीनिन्दाप्रसङ्गः। गृहस्थानां कृते नाऽयं नारीविरक्त्युपदेश इति स्फुटं प्रतिभाति।

एवं लघुतमोऽपि ग्रन्थोऽयं कञ्चिद् वृहत्तरं विशेषं स्वात्मनि क्रोडीकरोति।

१२. ११. ८६ अशोक कुमार कालिया
लखनऊ

# प्रश्नोत्तरमणिरत्नमाला

ओम् श्रीगणेशाय नमः

[१]

अपारसंसारसमुद्रमध्ये
समज्जतो[1] मे शरणं किमस्ति ?
गुरो ! कृपालो ! कृपया वदैतद्
विश्वेशपादाम्बुजदीर्घनौका ॥

[२]

बन्धो[2] हि को ? यो विषयानुराग:[3]
का वा विमुक्तिर्[4] ? विषये विरक्तिः ।
को वाऽस्ति घोरो नरकः ? स्वदेहः
तृष्णाक्षयः, स्वर्गपदं किमस्ति ?

[३]

संसारहृत्कः ? श्रुतिजात्मबोधः
को मोक्षहेतुः ? प्रथितः स एव ।
द्वारं किमेकं नरकस्य ? नारी
का स्वर्गदा प्राणभृतामहिंसा ॥

---

१. समज्जितो A
२. बद्धो C
३. विषयानुरागी C
४. विरक्तिर् A
विमुक्तोर् B

[४]

शेते सुखं कस्तु[1] ? समाधिनिष्ठो
जागर्ति को वा ? सदसद्विवेकी ।
के शत्रवः सन्ति ? निजेन्द्रियाणि
कान्येव[2] मित्राणि ? जितानि[3] तानि ॥

[५]

को वा दरिद्रो ? हि विशालतृष्ण:[4]
श्रीमांश्च को ? यस्य समस्ति[5] तोषः ।
जीवन्मृतः कस्तु ? निरुद्यमो यः[6]
का[7] वा[8] ऽमृता स्यात् ? सुखदा निराशा ॥

[६]

पाशो हि को यो ममता[9]ऽभिमानः
सम्मोहयत्येव[10] सुरेव का ? स्त्री[11] ।
को वा[12] महान्धो ? मदनातुरो यो
मृत्युश्च को वा ? ऽपयशः स्वकीयम् ॥

---

१. त्व A
२. तान्येव B
३. जितात्मिकानि B
४. A Omits ष्ण:
५. समस्त C
६. A Omits य:
७. किं C
८. वामृतं C
   वामृता AB
९. ममताभ्यधान: A
१०. सम्मोहिनी कैव A
११. सुभ्रू A
१२. कोपान् AB

[७]

को वा गुरुर् ? यो हि हितोपदेष्टा
शिष्यस्तु को ? यो गुरुभक्त[1] एव ।
को दीर्घरोगो ? भव एव साधो[2] ।
किमौषधम् ? तस्य विचार एव ॥

[८]

किं भूषणाद्[3] भूषणमस्ति[4] ? शीलं
तीर्थं परं किम् ? स्वमनो[5] विशुद्धम्[6] ।
किमत्र हेयम् ? कनकं च कान्ता
श्राव्यं सदा[7] किम् ? गुरुवेदवाक्यम् ॥

[९]

के हेतवो ब्रह्मगतेस्तु सन्ति ?
सत्[8]संगतिर्दा[9]न्तिविचारशक्तिः[10] ।
के सन्ति सन्तो ! ऽखिलवीतरागा
अपास्तमोहाः शिवतत्त्वनिष्ठाः[11] ॥

---

१. गुरुभक्ति B
२. साध्यो A
३. भूपनं B
४. दूषणं B
५. सुमनो B
६. विशुद्धिः A
७. परं B
८. सत्यंगतिर् B
९. दान C
१०. तोषाः BC
११. विष्ठाः A

[१०]

को वा ज्वरः प्राणभृताम् ? हि चिन्ता
मूर्खोऽस्ति को ? यस्तु विवेकहीनः ।
कार्या मया[1] का ? शिवविष्णुभक्तिः
किं जीवनम् ? दोषविवर्जितं यत् ॥

[११]

विद्या हि का ? ब्रह्मगतिप्रदा या
बोधोऽस्ति को ? यस्तु विमुक्तिहेतुः ।
को लाभ ? आत्मावगमो हि वेद्यो[2]
जितं जगत्[3] केन ? मनो हि येन ॥

[१२]

शूरा[4]न्महाशूरतमोऽस्ति को वा ?
मनोज[5]वाणैर्व्यथितो[6] न यस्तु ।
प्राज्ञो[7]ऽतिधीरश्च[8] समस्ति को वा ?
प्राप्तो न मोहं ललनाकटाक्षैः ॥

---

१. प्रिया B
२. वेदो A, वेयो B
३. जगद्येन A
४. शूरात्म B
५. मणोज B
६. विथितो B
७. प्राप्तो B
८. धोरश्च B

[१३]

विषाद् विषं किम् ? विषयाः समस्ताः
दुःखी सदा को ? विषयानुरागी ।
धन्योऽस्ति को ? यस्तु परोपकारी
कः पूजनीयो[1] ? ननु[2] तत्त्वदृष्टिः[3] ॥

[१४]

सर्वास्ववस्थास्वपि किं न कार्यम् ?
किं वा विधेयं विदुषा प्रयत्नात् ? ।
स्नेहश्च[4] पापं पठनञ्च धर्मः[5]
संसारमूलं हि किम् ? अस्त्यविद्या[6] ॥

[१५]

विज्ञान्महाविज्ञतमोऽस्ति[7] को वा ?
नार्या पिशाच्या न हि[8] वञ्चितो[9] यः ।
का शृङ्खला प्राणभृताम् हि नारी[10]
दिव्यं व्रतं[11] किञ्च[12] ? समस्तदैन्यम् ॥

---

१. पूजनीयं B
२. शिव C
३. निष्ठः BC
४. स्नेहं C
५. धर्म C
६. चिन्ती B चिन्ता C for अविद्या
७. विग B
८. ही B, च C
९. वंचतो B
१०. ना for नारी B
११. वृतं B
१२. वित्व B

[१६]

ज्ञातुं न शक्यं हि किमस्ति[1] सर्वैर् ।
योषिन्मनो यच्चरितं तदीयम् ।
का दुस्त्यजा सर्वजनैर् ? दुराशा
विद्याविहीनः[2], पशुरस्ति को वा ?॥

[१७]

वासो न संगः सह कैर्विधेयो ?
मूर्खैश्च पापैश्च खलैश्च नीचैः ।
मुमुक्षुणा किं त्वरितं विधेयम् ?
सत्संगति[3]र्निर्ममतेशभक्तिः ॥

[१८]

लघुत्वमूलं च किम् ? अर्थितैव[4]
गुरुत्वमूलं किम्[5] अयाचनं यत्[6] ।
जातोऽस्ति[7] को[8] ? यस्य पुनर्न जन्म
को वा मृतो ? यस्य पुनर्न मृत्युः ॥

---

१. समस्ति A
२. विहीना A
३. सत्संगति for सत्संगतिर् AB
४. अर्थतेव B
५. यद् AC, पद् B
६. किम् AB, च C
७. जाते B
८. किम् B

[१९]

मूकोऽस्ति को वा ? बधिरश्च को वा ?
युक्तं न वक्तुं समये समर्थः ।
तथ्यं सुपथ्यं न शृणोति वाक्यं,
विश्वासपात्रं न किमस्ति ? नारी ॥

[२०]

तत्त्वं किमेकम्? शिवमद्वितीयं
किमुत्तमम् ? सच्चरितं यदस्ति ।
किं कर्म कृत्वा न च शोचनीयम्[1]?
कामारिकं[2]सारिसमर्चनाख्यम्[3] ॥[4]

[२१]

शत्रोर्महाशत्रुतरोऽस्ति को वा ?
कामः सकोपानृ[5]तलोभतृष्णः ।
न पूर्यते को विषयैः ? स एव
किं दुःखमूलम् ? ममताभिमानः[6] ॥

---

१. शोचनीचः A
२. कामादि B
३. समर्चनीख्या B
४. 3rd and 4th line of this verse are 3rd and 4th line of verse 22 in C and vice versa
५. स को याजितलोभतृष्णः C
६. ममताभिधानम् C

[२२]

किं मण्डनम् ? साक्षरता मुखस्य
सत्यं च किम् ? भूतहितं यदेव[१] ।
त्याज्यं[२] सुखं किम् ? स्त्रियमेव सम्यग्
देयं परं किम् ? त्वभयं[३] सदैव[४] ।।

[२३]

कश्चास्ति[५] नाशो[६] मनसो[७] ? हि मोक्षः
क्व सर्वथा नाऽस्ति[८] भयम्? विमुक्तौ ।
शल्यं परं किम् ? निजमूर्खतैव
के के[९] ह्युपास्याः[१०] ? गुरवश्च वृद्धाः ।।

(२४)

उपस्थिते प्राणहरे कृतान्ते
किमाशु[११] कार्यं[१२] विदुषा प्रयत्नात्?
वाक्कायचित्तैः सुखदं यमघ्नं[१३]
मुरारिपादाम्बुज[१४]चिन्तनञ्च ।।

---

१. तदेव B
२. त्यक्ता A, त्यक्तवा B
३. तु भयं B
४. 3rd and 4th line of this verse are 3rd and 4th line of verse 20 in C and vice versa
५. कस्यास्ति C
६. नाशे C
७. मनशो B
८. नाति A
९. यो B
१०. ह्युपाशा B
११. किमस्ति B
१२. कार्या A
१३. A Omits this
१४. मुरारिपादाम्बुजमेव चिन्त्यम् AB

[२५)

के दस्यव: सन्ति ? कुवासनाख्या:
क: शोभते[1] ? य:[2] सदसि प्रविद्य: ।
मातेव[3] का ? या सुखदा सुविद्या
किमेधते दानवशात् ? सुविद्या ॥

[२६]

कुतो हि भीति: सततं विधेया ?
लोकापवादाद् भवकाननाच्च ।
को वाऽस्ति[4] बन्धु: पितरौ[5] च कौ वा[6] ?
विपत्सहाय:[7] परिपालकौ[8] यौ[9] ॥

[२७]

बुद्ध्वा न वोध्यं[10] परिशिष्यते किम् ?
शिवं प्रशान्तं[11] सुखबोधरूपम् ।
ज्ञाते तु कस्मिन् विदितं जगत् स्यात् ?
सर्वात्मके ब्रह्मणि पूर्णरूपम्[12] ॥

---

१. संशोभते क: for क: शोभते B
२. य: शोभते क: for क: शोभते य: A, B omits य:
३. B omits 3rd and 4th line
४. वाति C
५. पितरश्च के for पितरौ च कौ C
६. B adds माता च कोपि
७. च यप्सहाय: B
८. परिपालका C
९. ये C
१०. बुद्धानवोध A and कु न वोद्ध B for बुद्ध्वा न बोध्यम्
११. प्रशान्ता B; शिवप्रसादं for शिवं प्रशान्तं C
१२. पूर्णरूपम् C

[२८]

किं दुर्लभम् ? सद्गुरुरस्ति लोके
सत्सङ्गतिर् ब्रह्मविचारणा च ।
त्यागो हि सर्वस्य शिवात्मबोधः,
किं दुर्जयम्[1] ? सर्वजनैर्मनोजः ॥

[२९]

पशोः पशुः को ? न करोति धर्म
प्राधीतशास्त्रोऽपि न चा ऽऽ त्मबोधः ।
किं तद् विषं[2] भाति सुधोपमम् ? स्त्री
के शत्रवो मित्रवद्? आत्मजाऽऽद्याः ॥

[३०]

विद्युच्चलं किम् ? धनयौवनायुर्
दानं परं किञ्च[3] ? सुपात्रदत्तम् ।
कण्ठङ्गतैरप्यसुभिर्न कार्यं
किम् ? किं ! विधेयम् ? मलिनं शिवार्चा ॥

---

१. को दुर्जयः for किं दुर्जयम् C
२. हितं B
३. तु for च A

[३१]

किं कर्म ? यत् प्रीतिकरं मुरारेः
क्वा[1] ऽऽस्था न कार्या सततम् ? भवाब्धौ[2] ।
अहर्निशं किं परिचिन्तनीयम् ?
संसारमिथ्यात्वशि[3]वात्मतत्त्वम्[4] ॥

[३२]

कण्ठं गता[6] वा श्रवणं गता[7] वा
प्रश्नोत्तराख्या मणिरत्नमाला ।
तनोतु मोदं[8] विदुषां सुरम्या[9]
रमेशगौरीशकथेव सद्यः[10] ॥

इति प्रश्नोत्तराख्या मणिरत्नमाला समाप्ता[11]

—०—

---

१. का स्था A
२. भवाब्धौ B
३. शे B
४. बोधः B
५. 1st and 2nd lines of this verse are 3rd and 4th lines and 3rd and 4th lines are 1st and 2nd lines in C.
६. गतं A
७. गतं A
८. येयं A
९. सुरम्यां A, सुरम्यं C
१०. सध्यः B
११. इति श्री तुलसीदासकृता प्रश्नोत्तराख्या मणिरत्नमाल समाप्ताः A
इति श्री शुकयतीन्द्र विरचितं प्रश्नोत्तररत्नमाला सम्पूर्णं समाप्तम् । शुभमस्तु ।
संवत् १८७४ मार्ग शुक्ल ३ शुभम् B

# प्रश्नोत्तरमणिरत्नमालायामुल्लिखितप्रश्नानां सोत्तरनिर्देशम्
## अकारादिक्रमसूची

| क्रम संख्या | श्लोक संख्या | प्रश्ना: | उत्तराणि |
|---|---|---|---|
| १ | १ | अपारसंसारसमुद्रमध्ये<br>समज्जतो मे शरणं किमस्ति ?<br>गुरो ! कृपालो ! कृपया वदैतद् | विश्वेशपादाम्बुजदीर्घनौका |
| २ | ३१ | अहर्निशं किं परिचिन्तनीयम् | संसारमिथ्यात्वशिवात्मतत्त्वम् |
| ३ | २४ | उपस्थिते प्राणहरे कृतान्ते<br>किमाशु कार्यं विदुषा प्रयत्नात् ? | वाक्कायचित्तै: सुखदं यमघ्नं<br>विश्वेशपादाम्बुजचिन्तनञ्च । |
| ४ | १३ | क: पूजनीयो ? | ननु तत्त्वदृष्टि: । |
| ५ | २५ | क: शोभते ? | य: सदसि प्रविद्य: । |
| ६ | ३० | कण्ठङ्गतैरप्यसुभिर्न कार्यं किम् ? | मलिनम् । |
| ७ | २३ | कश्चाऽस्ति नाशो मनसो ? | हि मोक्ष: । |
| ८ | १६ | का दुस्त्यजा सर्वजनैर् ? | दुराशा । |
| ९ | ४ | कान्येव मित्राणि ? | जितानि तानि । |
| १० | १० | कार्या मया का ? | शिवविष्णुभक्ति: । |
| ११ | ५ | का वाऽमृता स्यात् ? | सुखदा निराशा । |
| १२ | २ | का वा विमुक्तिर् ? | विषये विरक्ति: । |
| १३ | १५ | का शृङ्खला प्राणभृताम् ? | हि नारी । |
| १४ | ३ | का स्वर्गदा ? | प्राणभृतामहिंसा । |
| १५ | ८ | किमत्र हेयम् ? | कनकं च कान्ता । |
| १६ | २० | किमुत्तमम् ? | सच्चरितं यदस्ति । |
| १७ | २५ | किमेधते दानवशात् ? | सुविद्या । |
| १८ | ७ | किमौषधम् ? | तस्य विचार एव । |
| १९ | २० | किं कर्म कृत्वा न च शोचनीयम् ? | कामारिकंसारिसमर्चनाख्यम् । |

| | | | |
|---|---|---|---|
| २० | ३१ | किं कर्म ? | यत् प्रीतिकरं मुरारेः । |
| २१ | १० | किं जीवनम् ? | दोषविवर्जितं यत् । |
| २२ | २९ | किं तद्विषं भाति सुधोपमम् ? | स्त्री । |
| २३ | २८ | किं दुर्जयं सर्वजनैर् ? | मनोजः । |
| २४ | २१ | किं दुःखमूलम् ; | ममताभिमानः । |
| २५ | २८ | किं दुर्लभम् ? | ———सद्गुरुरस्ति लोके ।<br>सत्सङ्गतिर्ब्रह्मविचारणा च ।<br>त्यागो हि सर्वस्य शिवात्मबोधः । |
| २६ | ८ | किं भूषणाद् भूषणमस्ति ? | शीलम् । |
| २७ | २२ | किं मण्डनं······मुखस्य ? | साक्षरता । |
| २८ | १४ | किं वा विधेयं विदुषा प्रयत्नात् ? | पठनञ्च धर्मः । |
| २९ | ३० | किं विधेयम् ? | शिवार्चा । |
| ३० | २६ | कुतो हि भीतिः सततं विधेया ? | लोकापवादाद् भवकाननाच्च । |
| ३१ | २३ | के के ह्युपास्याः ? | गुरवश्च वृद्धाः । |
| ३२ | २५ | के दस्यवः सन्ति ? | कुवासनाख्याः । |
| ३३ | २९ | के शत्रवो मित्रवद्? | आत्मजाद्याः । |
| ३४ | ४ | के शत्रवः सन्ति ? | निजेन्द्रियाणि । |
| ३५ | ९ | के सन्ति सन्तोऽखिलवीतरागाः ? | अपास्तमोहाः शिवतत्त्वनिष्ठाः । |
| ३६ | ९ | के हेतवो ब्रह्मगतेस्तु सन्ति ? | सत्संगतिदान्तिविचारशक्तिः । |
| ३७ | ७ | को दीर्घरोगो ? | भव एव साधो ! |
| ३८ | ३ | को मोक्षहेतुः ? | प्रथितः स एव । |
| ३९ | ७ | को वा गुरुर् ? | यो हि हितोपदेष्टा । |
| ४० | १० | को वा ज्वरः प्राणभृताम् ? | हि चिन्ता । |
| ४१ | ५ | को वा दरिद्रो ? | हि विशालतृष्णः । |
| ४२ | ६ | को वा महान्धो ? | मदनातुरो यः । |
| ४३ | १८ | को वा मृतो ? | यस्य पुनर्न मृत्युः । |
| ४४ | २ | को वाऽस्ति घोरो नरकः ? | स्वदेहः । |
| ४५ | २६ | को वाऽस्ति बन्धुर् ? | विपत्सहायः । |
| ४६ | ११ | को लाभ ? | आत्मावगमो हि वेद्यो । |
| ४७ | २३ | क्व सर्वथा नाऽस्ति भयम् ? | विमुक्तौ । |
| ४८ | ३१ | क्वाऽऽस्था न कार्या सततम् | भवाब्धौ । |
| ४९ | १८ | गुरुत्वमूलं किम् ? | अयाचनं यत् । |
| ५० | ४ | जागर्ति को वा ? | सदसद्विवेकी । |
| ५१ | १८ | जातोऽस्ति को ? | यस्य पुनर्न जन्म । |

| | | | |
|---|---|---|---|
| ५२ | ११ | जितं जगत् केन ? | मनो हि येन । |
| ५३ | ५ | जीवन्मृतः कस्तु ? | निरुद्यमो यः । |
| ५४ | १६ | ज्ञातुं न शक्यं हि किमस्ति सर्वैर् ? | योषिन्मनो यच्चरितं तदीयम् । |
| ५५ | २७ | ज्ञाते तु कस्मिन् विदितं जगत् स्यात् ? | सर्वात्मके ब्रह्मणि पूर्णरूपम् । |
| ५६ | २० | तत्त्वं किमेकम् ? | शिवमद्वितीयम् । |
| ५७ | ८ | तीर्थं परं किम् ? | स्वमनो विशुद्धम् । |
| ५८ | २२ | त्याज्यं सुखं किम् ? | स्त्रियमेव सम्यग् । |
| ५९ | ३० | दानं परं किञ्च ? | सुपात्रदत्तम् । |
| ६० | १५ | दिव्यं व्रतं किञ्च ? | समस्तदैन्यम् । |
| ६१ | १३ | दुःखी सदा को ? | विषयानुरागी । |
| ६२ | २२ | देयं परं किम् ? | त्वभयं सदैव । |
| ६३ | ३ | द्वारं किमेकं नरकस्य ? | नारी । |
| ६४ | १३ | धन्योऽस्ति को ? | यस्तु परोपकारी । |
| ६५ | २१ | न पूर्यते को विषयैः ? | स एव । |
| ६६ | २९ | पशोः पशुः को ? | प्राधीतशास्त्रोऽपि न चाऽऽत्मबोधः । न करोति धर्मम् |
| ६७ | ६ | पाशो हि को ? | यो ममताभिमानः । |
| ६८ | २६ | पितरौ च कौ वा ? | परिपालकौ यौ । |
| ६९ | १२ | प्राज्ञोऽतिधीरश्च समस्ति को वा ? | प्राप्तो न मोहं ललनाकटाक्षैः । |
| ७० | २ | बन्धो हि को ? | यो विषयानुरागः । |
| ७१ | २७ | बुद्ध्वा न बोध्यं परिशिष्यते किम् ? | शिवं प्रशान्तं सुखबोधरूपम् । |
| ७२ | ११ | बोधोऽस्ति को ? | यस्तु विमुक्तिहेतुः । |
| ७३ | २५ | मातेव का ? | या सुखदा सुविद्या । |
| ७४ | १७ | मुमुक्षुणा किं त्वरितं विधेयम् ? | सत्संगतिर्निर्ममतेशभक्तिः । |
| ७५ | १९ | मूकोऽस्ति को वा ? | युक्तं न वक्तुं समये समर्थः । |
| ७६ | १० | मूर्खोऽस्ति को ? | यस्तु विवेकहीनः । |
| ७७ | ६ | मृत्युश्च को वा ? | अपयशः स्वकीयम् । |
| ७८ | १८ | लघुत्वमूलं च किम् ? | अर्थितैव । |
| ७९ | १९ | बधिरश्च को वा ? | तथ्यं सुपथ्यं न शृणोति वाक्यम् । |
| ८० | ३० | विद्युच्चलं किम् ? | धनयौवनायुर् । |
| ८१ | १७ | वासो न संगः सह कैर्विधेयो ? | मूर्खैश्च पापैश्च खलैश्च नीचैः । |
| ८२ | १५ | विज्ञान्महाविज्ञतमोऽस्ति को वा ? | नार्या पिशाच्या न हि वंचितो यः । |
| ८३ | १६ | पशुरस्ति को वा ? | विद्याविहीनः । |

| | | | |
|---|---|---|---|
| ८४ | ११ | विद्या हि का ? | ब्रह्मगतिप्रदा या । |
| ८५ | १९ | विश्वासपात्रं न किमस्ति ? | नारी । |
| ८६ | १३ | विषाद् विषं किम् ? | विषयाः समस्ताः । |
| ८७ | २१ | शत्रोर्महाशत्रुतरोऽस्ति को वा ? | कामः सकोपानृतलोभतृष्णः । |
| ८८ | २३ | शल्यं परं किम् ? | निजमूर्खतैव । |
| ८९ | ७ | शिष्यस्तु को ? | यो गुरुभक्त एव । |
| ९० | १२ | शूरान्महाशूरतरोऽस्ति को वा ? | मनोजवाणैर्व्यथितो न यस्तु । |
| ९१ | ४ | शेते सुखं कस्तु ? | समाधिनिष्ठो । |
| ९२ | ८ | श्राव्यं सदा किम् ? | गुरुवेदवाक्यम् । |
| ९३ | ५ | श्रीमांश्च को ? | यस्य समस्ति तोषः । |
| ९४ | १४ | संसारमूलं हि किम् ? | अस्त्यविद्या । |
| ९५ | ३ | संसारहृत् कः ? | श्रुतिजात्मबोधः । |
| ९६ | २२ | सत्यं च किम् ? | भूतहितं यदेव । |
| ९७ | ६ | सम्मोहयत्येव सुरेव का ? | स्त्री । |
| ९८ | १४ | सर्वास्ववस्थास्वपि किं न कार्यम् ? | स्नेहश्च पापम् । |
| ९९ | २ | स्वर्गपदं किमस्ति ? | तृष्णाक्षयः । |